**४५३. उपसर्जनं पूर्वम् ॥ ३० ॥ (६५४)**

**'समासे' इति वर्त्तते। उपसर्जनसंज्ञकं समासे पूर्वं प्रयोक्तव्यम्। पूर्ववचनं परप्रयोगनिवृत्त्यर्थम्।**

**न्यासः**

**उपसर्जनं पूर्वम् ॥ पूर्ववचनं परप्रयोगनिवृत्त्यर्थमिति।** ननु च परप्रयोगविपर्ययो लोके न दृष्ट एव,

**पदमञ्जरी**

**प्लक्षन्यग्रोधाविति।** चशब्दस्याव्ययत्वेऽपि तदर्थे विधीयमानस्य द्वन्द्वस्य स्वभावादेव लिङ्गसंख्यायोगः। कथं पुनरत्र द्विवचनम्, यावता शब्दपौर्वापर्यादर्थाभिधानेऽपि पौर्वापर्यम्, ततश्च प्लक्षशब्दः सहार्थेन निवृत्तः न्यग्रोधशब्दः उपस्थितः, एक एवार्थस्तस्यैकत्वादेकवचनमेव प्राप्नोति, तथा च 'आद्यन्तौ टकितौ' इति क्रमेण प्रतीतिमङ्गीकृत्य यथासंख्यमित्यस्य प्रवृत्तिः, न च क्रमेण द्वयोरर्थयोः प्रतीतौ द्विवचनं भवति; यथा वा वाक्ये प्लक्षश्च न्यग्रोधश्चेति। अत्र न्यग्रोधार्थप्रतीतिदशायां प्लक्षार्थस्याप्रतीतिरेव कारणम्? अस्तु तर्हि युगपदधिकरणवचने द्वन्द्वः। किमिदं युगपदधिकरणवचन इति? अधिकरणं वर्तिपदार्थः, अधिकरणे युगपद्वचनं युगपदधिकरणवचनम्, तत्र द्वन्द्वो भवति। केन पुनर्युगपद् द्वयोर्वचनम्? एकैकेन पदेन। एतदुक्तं भवति—यावतां पदानां द्वन्द्वो यदि तावतामन्योऽन्यार्थाभिधानं युगपद्भवत्येवं द्वन्द्वो भवतीति। अत्र हि द्विवचनबहुवचनान्यथानुपपत्तिरेव प्रमाणम्; विग्रहे चापि दर्शनात्। विग्रहे खल्वपि युगपद्वचनता दृश्यते—प्रमित्रयोर्वरुणयोः (ऋ० ७.६६.१), द्यावाचिदस्मै पृथिवी नमेते (ऋ० २.१२.१३) इति; किं पुनः समासे, यत्र चान्याचान्या च शक्तिः प्रादुर्भवति? कथं पुनः प्लक्षशब्देन न्यग्रोधाभिधानम्, तेन वा तस्य? साहचर्यादिति। यद्वा तद्वा निमित्तं भवतु, यद्यपि च लोकव्यवहारे केवलस्य प्लक्षशब्दस्य न्यग्रोधाभिधायित्वं न दृष्टं न्यग्रोधशब्दस्य वा प्लक्षाभिधायित्वम्, द्वन्द्वावयवानां त्वनेकार्थाभिधायित्वं न केवलानामित्यदोषः। नियतविषयाश्चापि शब्दार्था भवन्ति, यथा—भ्रातृशब्दस्यैकशेष एव स्वसरि वृत्तिः, पुत्रशब्दस्य दुहितरि। एतेनैतदपि निरस्तम्—एकेनोक्तत्वात्तस्यार्थस्य परस्य प्रयोगो नोपपद्यत इति।

कथं द्वन्द्वावयवानामेव परस्परसन्निधानादेषा शक्तिर्वह्निसन्निधाविव घृते द्रवता, नो खलु वह्निविगतौ भवति, यदि तर्हि प्लक्षोऽपि द्व्यर्थो न्यग्रोधोऽपि द्व्यर्थः, बहुत्वाद्बहुवचनं प्राप्नोति? नात्र चत्वारोऽर्थाः, किं तर्हि? याभ्यामेवात्रैको द्व्यर्थस्ताभ्यामेवापरोऽपि। स्यादेतत्—उभयोरत्र पर्यायत्वे यथा प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधाविति द्विर्वचने प्रतीतिः, एवं प्लक्षन्यग्रोधावित्यत्रापि प्राप्नोति, तन्न; युगपदुत्पादात्। तद्यथा द्वयोरक्ष्णोर्युगपद्विस्फारितयोः पुरोवर्त्तिन्यर्थद्वये युगपदेका प्रतीतिर्जन्यते। तथेहापि द्रष्टव्यम्। ननु यदा प्लक्षशब्दो न तदा न्यग्रोधशब्दः, यदा न्यग्रोधशब्दो न तदा प्लक्षशब्दः इति कथमत्र युगपद्व्यापारः? स्मृतिस्थयोर्युगपद्व्यापाराददोषः। पदानि हि श्रुतमात्राणि स्वं स्वमर्थं स्मारयन्ति, पश्चादाकाङ्क्षासन्निधियोग्यत्वेषु परामृष्टेषु स्मृतिस्थान्यभिदधति, तस्यामेव स्मृतौ युगपदारोहात्सम्भवत्येव युगपद्व्यापारः। या च सा पदार्थानां स्मृतिः सा क्रमभाविनीति तत्क्रमेणैव यथासंख्यादिव्यवस्था युगपदभिधानेऽप्युपपद्यते। तदेवं युगपदधिकरणवचने द्वन्द्व इति स्थितम्। इहैकविंशतिर्द्वाविंशतिरिति, यद्ययं द्वन्द्वः स्याद् एकं च विंशतिश्चेतीतरेतरयोगे द्विवचनबहुवचनप्रसङ्गः, समाहारे च 'स नपुंसकम्' इति नपुंसकप्रसङ्गः, अत एव एकाधिका विंशतिरेकविंशतिरिति शाकपार्थिवादित्वात्समासः क्रियते? नैवं शक्यम्, 'राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु संख्या' इति पूर्वपदप्रकृतिस्वरो न स्यात्। तस्माद् द्वन्द्व एवायम्। स समाहारे नेतरेतरयोगे, अनभिधानात्। नपुंसकत्वन्तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' (चान्द्रपरि० ७३) इति न भवति ॥ २९॥

**उपसर्जनं पूर्वम् ॥ अनियमो हि स्यादिति।** यद्यपि विपरीतप्रयोगो लोके न दृष्टः परपुरुषापराधात्तु

**भावबोधिनी**

'समासे' इसकी अनुवृत्ति होती है। समास में उपसर्जन संज्ञावाले का पूर्व में प्रयोग करना चाहिये। पर में प्रयोग को रोकने के लिये 'पूर्व' का विधान है। अन्यथा अनियम होने लगेगा। अर्थात् किसका प्रयोग पहले हो और

**अनियमो हि स्यात् । द्वितीया—कष्टश्रितः । तृतीया—शंकुलाखण्डः । चतुर्थी—यूपदारु । पञ्चमी—वृकभयम् । षष्ठी—राजपुरुषः । सप्तमी—अक्षशौण्डः ॥**

## ४५४. राजदन्तादिषु परम् ॥ ३१ ॥ (६०२)

**पूर्वनिपाते प्राप्ते परप्रयोगार्थं वचनम् । राजदन्तादिषु परमुपसर्जनं प्रयोक्तव्यम् । न केवलमुपसर्जनस्य, अन्यस्यापि यथालक्षणं विहितस्य पूर्वनिपातस्यापवादः परनिपातो विधीयते । दन्तानां राजा राजदन्तः । वनस्याग्रे अग्रेवणम् । निपातनादलुक् ।**

**राजदन्तः । अग्रेवणम् । लिप्तवासितम् । नग्नमुषितम् । सिक्तसंमृष्टम् । मृष्टलुञ्चितम् । अवक्लिन्नपक्वम् । अर्पितोप्तम् । उप्तगाढम् ।**

**न्यासः**

तत् कथं परप्रयोगनिवृत्त्यर्थेन पूर्वग्रहणेनेत्यत आह—**अनियमो हि स्यादिति** । सम्भावनायां लिङ् । एवं मन्यते—यद्यपि परप्रयोगविपर्ययो न दृष्टः, तथाप्यसति नियामके वाक्ये पुरुषापराधाद् विपरीतप्रयोगोऽपि सम्भाव्येत । येषाञ्च वाक्यमेव समासोभवतीति दर्शनम्, येषां वाक्यस्यानियतक्रमत्वात् तद्विकारोऽपि समासोऽनियतक्रमः स्यादिति सूत्रारम्भः ॥ ३० ॥

**राजदन्तादिषु परम् ॥** पूर्वस्य परनिपात इति लिप्तवासिताद्युप्तगाढपर्यन्तेषु । उलूखलमुसलादयो ये द्वन्द्वाः, तत्र क्वचिदल्पाच्तरत्वात् पूर्वनिपातः प्राप्नोति, क्वचिद् घ्यन्तत्वात् पूर्वनिपातः, क्वचिदजाद्यन्तत्वात्;

**पदमञ्जरी**

वाक्यवत्सम्भाव्येतेत्यर्थः । इह राज्ञः पुरुषस्य पुत्रो राजपुरुषपुत्र इति षष्ठीसमासशास्त्रे द्वयोरपि प्रथमानिर्दिष्टत्वेऽप्युपसर्जनसंज्ञाऽन्वर्थत्वादप्रधानस्यैव भवति, पुरुषश्चात्र राजापेक्षया प्रधानमिति पूर्वनिपातनियमः ॥ ३० ॥

**राजदन्तादिषु परम् ॥ न केवलमित्यादि ।** अत्र विहितपूर्वनिपातस्येति पाठे विहितः पूर्वनिपातो यस्य तस्येत्यर्थः । प्रायेण तु **विहितस्येति** पाठः । तत्रापवाद इति शेषः । अन्यस्यापि घ्यादेर्यः पूर्वनिपातो यथालक्षणं विहितस्तस्याप्यपवाद इत्यर्थः । **अग्रेवणमिति** । 'वनं पुरगा' इत्यादिना णत्वम् । तदेव तर्हि णत्व-

**भावबोधिनी**

किसका बाद में—यह कोई व्यवस्था नहीं बन पायेगी । द्वितीयान्त के पूर्वप्रयोग का उदा०—कष्टश्रितः [कष्टं श्रितः यहाँ 'द्वितीया श्रितातीत०' (पा० सू० २।१।२४) से समास होता है । 'द्वितीया' यह प्रथमानिर्दिष्ट है । अतः प्रथमानिर्दिष्टं समास उपसर्जनम्' (पा० सू० १।२।४३) के अनुसार प्रथमान्त 'द्वितीया' पद द्वारा 'कष्टम्' का निर्देश है । अतः यही उपसर्जनसंज्ञक होता है, इसका पूर्वनिपात होता है । यही आगे के उदाहरणों में भी समझना चाहिये] तृतीया—शंकुलाखण्डः [शंकुलया खण्डः] । चतुर्थी—यूपदारु [यूपाय दारु] । पञ्चमी—वृकभयम् [वृकाद् भयम्] । षष्ठी—राजपुरुषः [राज्ञः पुरुषः] । सप्तमी—अक्षशौण्डः [अक्षेषु शौण्डः] ।

**विमर्श**—इन सभी का विशद विवेचन पहले इस द्वितीय अध्याय के प्रथम पाद में सूत्र २४, ३०, ३६, ३७, ४० और द्वितीयपाद के सूत्र ८ में किया जा चुका है वहीं देखें । इन सभी उदाहरणों के समासविधायक सूत्रों में प्रथमानिर्दिष्ट पद से जो बोध्य हैं उनकी उपसर्जन संज्ञा होने से उनका पूर्वनिपात होता है ॥ ३० ॥

[पूर्वसूत्र से] पूर्वनिपात के प्राप्त रहते परनिपात के लिये यह वचन है । राजदन्त आदि शब्दों में उपसर्जनसंज्ञक का प्रयोग बाद में करना चाहिये । यह केवल उपसर्जन का नहीं, और भी सूत्रानुसार क़िये गये पूर्वनिपात का, अपवादभूत यह परनिपात किया जा रहा है । उदा०—दन्तानां राजा—राजदन्तः [यहाँ 'षष्ठी' (पा० सू० २।२।८) सूत्र से समास होने के कारण प्रथमान्तनिर्दिष्ट षष्ठी = षष्ठ्यन्त बोध्य 'दन्त' का पूर्वप्रयोग प्राप्त है । परन्तु प्रस्तुत सूत्र से परनिपात होता है ।] वनस्य अग्ने—अग्नेवणम् [यहाँ भी परनिपात होता है । 'वनं पुरगामिश्रका०' (पा० सू० ८।४।४) से न् का ण् हो जाता है ।] यहाँ निपातनाद सप्तमी का अलुक् होता है । [लोप नहीं होता है ।]

पूर्वकालस्य परनिपातः—उलूखलमुसलम् । तण्डुलकिण्वम् । दृषदुपलम् । आरग्वायनबन्धकी । चित्ररथबाह्लीकम् । आवन्त्यश्मकम् । शूद्रार्यम् । स्नातकराजानौ । विष्वक्सेनार्जुनौ । अक्षिभ्रुवम् । दारगवम् ।

शब्दार्थौ । धर्मार्थौ । कामार्थौ । अनियमश्चात्रेष्यते । अर्थशब्दौ । अर्थधर्मौ । अर्थकामौ । तत्कथम् ? वक्तव्यमिदम्—धर्मादिषूभयमिति । वैकारिकतम् । गजवाजम् । गोपालधानीपूलासम् । पूलासककरण्डम् । स्थूलपूलासम् । उशीरबीजम् । सिञ्जास्थम् । चित्रास्वाती । भार्यापती । जायापती । जम्पती । दम्पती । जायाशब्दस्य जम्भावो दम्भावश्च निपात्यते । पुत्रपती । पुत्रपशू । केशश्मश्रू । श्मश्रुकेशौ । शिरोबीजम् । सर्पिर्मधुनी । मधुसर्पिषी । आद्यन्तौ । अन्तादी । गुणवृद्धी । वृद्धिगुणौ[1] ॥

**न्यासः**

क्वचित् तुल्यत्वादनियमः । **दृषदुपलमिति** प्रमादाम्नायं पाठो लक्ष्यते । अल्पाच्तरत्वाद् दृषच्छब्दस्य पूर्वनिपातः सिद्धः । **अक्षिभ्रुवम्, दारगवमिति** । अचतुरादिसूत्रेणाच् समासान्तः । **स्थूलपूलासमिति** । प्रमादपाठोऽयं लक्ष्यते; पूर्वोक्तादेव कारणात् ॥ ३१ ॥

**पदमञ्जरी**

विधानं परनिपातस्य ज्ञापकं भविष्यति ? तन्न, 'उपसर्जनं पूर्वम्' इति नियमो न प्रवर्त्तत इत्येतावतोऽप्यर्थस्य ज्ञापकत्वेन तदुपपन्नम्, तस्मात्कथं नियमेन परनिपातः स्यात् ? इह च निपातनादलुगिव णत्वमपि न भविष्यतीति तत्राग्रेग्रहणं शक्यमकर्तुम् । **पूर्वकालस्येति** । 'पूर्वकालैक' इति प्रथमानिर्द्दिष्टादुपसर्जनस्येत्यर्थः । उलूखलमुसलादिद्वन्द्वेषु क्वचिदल्पाक्षरत्वात्क्वचिद् घ्यन्तत्वात्क्वचिदजाद्यदन्तत्वात्पूर्वनिपातप्रसङ्गः, क्वचिदनियमः । **दृषदुपलमिति** । प्रमाद पाठः; अल्पाच्तरत्वात् । **अक्षिभ्रुवं दारगवमिति** । अचतुरादिसूत्रेऽच्समासान्तो निपातितः, तेन परनिपातस्यापि सिद्धत्वादिह पाठः शक्योऽकर्तुम् ॥ ३१ ॥

**भावबोधिनी**

[इस गण में पठित शब्द—] राजदन्तः [दातों का राजा = प्रधान] । अग्रेवणम् [वन के आगे] लिप्तवासितम् । नग्नमुषितम् । सिक्तसंमृष्टम् मृष्टलुञ्चितम । अवक्लिन्नपक्वम् । अर्पितोप्तम् । उत्सगाढम् । [इन सभी में पूर्व का परनिपात है । अतः विग्रहवाक्य में परवर्त्ती को पहले रखना चाहिये ।]

पूर्वकाल ['पूर्वकालैक०' (पा० सू० २।१।४९) में प्रथमानिर्दिष्ट द्वारा बोधित उपसर्जन के परनिपात के उदा०]— उलूखलमुसलम् [मुसलं च उलूखलं च । अल्पाच् होने से मुसल का पूर्वनिपात प्राप्त है ।] तण्डुलकिण्वम् [यहाँ भी पूर्ववत् किण्व का पूर्वनिपात प्राप्त है ।] दृषदुपलम् [यहाँ 'अजाद्यन्तम्' (पा० सू० २।२।३३) से उपल का पूर्वप्रयोग प्राप्त है ।] आरग्वायनबन्धकी [यहाँ बन्धकी का पूर्वप्रयोग प्राप्त है ।] चित्ररथबाह्लीकम् [यहाँ भी वाह्लीक का पूर्वप्रयोग प्राप्त है ।] आवन्त्यश्मकम् [अश्मक का पूर्वप्रयोग प्राप्त है ।] शूद्रार्यम् [आर्य का पूर्वप्रयोग प्राप्त है ।] स्नातकराजानौ विष्वक्सेनार्जुनौ [राजा और अर्जुन का पूर्वप्रयोग प्राप्त है ।] अक्षिभ्रुवम् । दारगवम् [इन दोनों की सिद्धि 'अचतुरविचतुर०' (पा० सू० ३।४।७७) से होती है । उसमें ऐसा ही पाठ है ।]

शब्दार्थौ । धर्मार्थौ । कामार्थौ । यहाँ अनियम इष्ट है । अर्थशब्दौ । अर्थधर्मौ । अर्थकामौ—यह कैसे होता है ? 'यह कहना चाहिये कि धर्म आदि में दोनों [का पूर्वनिपात होता है ।] वैकारिकतम् [वैकारिमतम्] । गजवाजम् गोपालधानीपूलासम् । पूलासकरण्डकम् । स्थूलपूलासम् । उशीरबीजम् । सिञ्जास्थम् । चित्रास्वाती । [दोनों नक्षत्र हैं] । भार्यापती । जायापती । जम्पती । दम्पती [इन चार शब्दों का अर्थ है पत्नी और पति] जाया शब्द का जम्भाव = जम

---

1 भीष्मद्रोणौ, द्रोणभीष्मौ, चन्द्रादित्यौ, आदित्यचन्द्रौ, चन्द्रराहु, राहुचन्द्रौ, ग्रीष्मवसन्तौ, वसन्तग्रीष्मौ, शुक्रशुची, शुचिशुक्रौ, करभरासभौ, रासभकरभौ इत्यधिकं क्वचित् ।

## ४५५. द्वन्द्वे घि ॥ ३२ ॥ (९०३)

**'पूर्वम्' इति वर्त्तते। द्वन्द्वे समासे घ्यन्तं पूर्वं प्रयोक्तव्यम्। पटुगुप्तौ। मृदुगुप्तौ। अनेकप्राप्तावेकस्य नियमः, शेषे त्वनियमः। पटुमृदुशुक्लाः। पटुशुक्लमृदवः।**

**द्वन्द्व इति किम्? विस्पष्टपटुः॥**

**न्यासः**

द्वन्द्वे घि ॥ 'उपसर्जनम्' इत्यन्वर्थसंज्ञाविज्ञानादप्रधानस्योपसर्जनसंज्ञा विहिता। द्वन्द्वे च सर्वेषां पदानां प्राधान्यम्। न कस्यचिदप्राधान्यमित्युपसर्जनसंज्ञाया अभावादनियमे प्राप्ते वचनमिदम्। यत्र यत्र बहूनां पूर्वनिपातप्रसङ्गस्तत्र किमेकस्यानियमो भविष्यति, उत सर्वेषामित्याह—**अनेकप्राप्तावेकस्येत्यादि**। एष चार्थो जातिपदार्थस्याश्रयणाल्लभ्यते। व्यक्तौ तु पदार्थे प्रतिव्यक्ति शास्त्रप्रवृत्त्या भवितव्यम्, ततः सर्वेषां नियमः स्यात्। आकृतौ तु पदार्थे लक्ष्य एकं लक्षणं सकृदेव प्रवर्त्तते। तेन चैकस्य पूर्वनिपाते जातिः कृतार्थेति शेषाणामनियमो भवति। एवमुत्तरत्राप्येकस्य नियमः, शेषाणान्त्वनियम इति वेदितव्यम्। **विस्पष्टपटुरिति**। विस्पष्टः पटुः, मयूरव्यंसकादित्वात् समासः॥ ३२॥

**पदमञ्जरी**

द्वन्द्वे घि ॥ द्वन्द्वेऽनेकमिति प्रथमानिर्देशात्सर्वेषामेवोपसर्जनत्वादनियमे प्राप्ते वचनम्। **अनेकप्राप्ताविति**। आकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्त्तते, न प्रतिव्यक्त्यावृत्त्या। तत्रैकस्यैव पूर्वनिपातेन जातौ लक्षणं प्रवृत्तमेवेति न पुनः प्रवर्तते। नन्वाकृतिपक्षेऽपि पटुगुप्तौ मृदुगुप्तावित्यादिषु बहुषु व्यक्तिषु यथा युगपत्प्रवर्तते, तथात्रापि प्रवर्तताम्? एवं मन्यते—एकस्य युगपदवध्यवधिमद्भावो विरोधान्न सम्भवति। न चान्तमपेक्ष्योभयोः पूर्वत्वमन्यतरेण व्यवधानादिति, अत्र च यदा पटुमृद्वोर्द्वन्द्वं कृत्वा पश्चाच्छुक्लशब्दस्य द्वन्द्वः क्रियते तदाल्पाच्तरत्वात्तस्य पूर्वनिपाते शुक्लमृदुपटवः, शुक्लपटुमृदव इति च भवति। **विस्पष्टपटुरिति**। विस्पष्टशब्दः प्रवृत्तिनिमित्तस्य पाटवस्य विशेषणमिति विस्पष्टं पटुरिति विगृह्य 'सुप्सुपा' इति समासः॥ ३२॥

**भावबोधिनी**

होना और दम्भाव = दम् होना निपातित होता है। पुत्रपती, पुत्रपशू। केशश्मश्रू [दाढ़ी मूछ] श्मश्रुकेशौ। शिरोबीजम्। सर्पिर्मधुनी। मधुसर्पिषी [दोनों का अर्थ है—घी और शहद] आद्यन्तौ। अन्तादो [आदि और अन्त] गुणवृद्धी। वृद्धिगुणौ। [दोनों का अर्थ है गुण और वृद्धि।]

**विमर्श**—इस गण में अधिकांश शब्द द्वन्द्व के विषय हैं। अतः यहाँ पर उपन्यास किया गया है। भट्टोजिदीक्षित ने इसे 'आकृतिगण' लिखा है। काशिका और न्यासादि में इस विषय में कोई संकेत नहीं है। प्रकाशित गणपाठ में भी ऐसा संकेत नहीं है। सम्भवतः अपठित लक्ष्यों को ध्यान में रखकर ऐसा लिख दिया होगा। यहाँ कुछ अप्रसिद्ध शब्दों का भी समावेश है॥ ३१॥

[यहाँ 'उपसर्जनं पूर्वम्' (पा० सू० २।२।३०) सूत्र से] 'पूर्वम्' इसकी अनुवृत्ति होती है। द्वन्द्व समास में घिसंज्ञक शब्द का पहले प्रयोग करना चाहिये। उदा०—पटुगुप्तौ [पटुश्च गुप्तश्च यह विग्रह है। 'शेषो घ्यसखि' (पा० सू० १।४।७) के अनुसार पटु शब्द घिसंज्ञक है। अतः इसका पूर्वनिपात है।] मृदुगुप्तौ [मृदुश्च गुप्तश्च। यहाँ भी मृदु घिसंज्ञक है। अतः इसी का पूर्वनिपात होता है।] * अनेक घिसंज्ञक पदों के द्वन्द्व की प्राप्ति रहने पर एक घिसंज्ञक शब्द के पूर्वनिपात का नियम है शेष में कोई नियम नहीं है, अर्थात् विकल्प होता है। इसीलिये] पटुमृदुशुक्लाः, मृदुपटुशुक्लाः यहाँ घिसंज्ञक पटु और मृदु दोनों का क्रमशः पूर्वनिपात होता है।]

द्वन्द्व में—इसका क्या फल है? विपष्टपटुः [विस्पष्टं पटुः यह विग्रह है। तत्पुरुष समास 'मयूरव्यंसकादयश्च' [पा० सू० २।१।७२] सूत्र से होता है। अतः द्वन्द्व न होने से 'पटु' का पूर्वनिपात नहीं होता है।] ॥ ३२॥

## ४५६. अजाद्यदन्तम् ॥ ३३ ॥ (९०४)

'द्वन्द्वे' इति वर्त्तते। अजाद्यदन्तं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम् । उष्ट्रखरम् । उष्ट्रशशकम् ।
* बहुष्वनियमः *। अश्वरथेन्द्राः । इन्द्ररथाश्वाः ।
*द्वन्द्वे घ्यन्तादजाद्यदन्तं विप्रतिषेधेन* । इन्द्राग्नी । इन्द्रवायू ।
तपरकरणं किम् ? अश्वावृषौ, वृषाश्वे इति वा ॥

## ४५७. अल्पाच्तरम् ॥ ३४ ॥ (९०५)

'द्वन्द्वे' इति वर्त्तते। अल्पाच्तरं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम् । प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ । धवखदिरपलाशाः । बहुष्वनियमः—शङ्खदुन्दुभिवीणाः । वीणाशङ्खदुन्दुभयः ।

### न्यासः

**अजाद्यदन्तम् ॥ द्वन्द्वे घ्यन्तादजाद्यदन्तं विप्रतिषेधेनेति ।** 'द्वन्द्वे घि' इति तस्मादजाद्यदन्तमित्येतद् भवति विप्रतिषेधेन। 'द्वन्द्वे घि' इत्यस्यावकाशः—पटुशुक्लौ, पटुगुप्तौ। 'अजाद्यदन्तम्' इत्यस्यावकाशः—उष्ट्रशशौ, उष्ट्रखरौ । इन्द्राग्नी इत्यत्रोभयं प्राप्नोति, अजाद्यदन्तं भवति विप्रतिषेधेन ।। ३३ ॥

**अल्पाच्तरम् ॥ ऋतुनक्षत्राणामित्यादि ।** ऋतूनामानुपूर्व्यं प्रादुर्भावकृतम्, नक्षत्राणामुदयकृतम् । ऋतुनक्षत्राणामित्यत्रैव वर्णग्रहणं कस्मान्न कृतमिति पर्यनुयोगदोषमाशङ्क्याह—**समानाक्षराणामित्यादि ।**

### पदमञ्जरी

**अजाद्यदन्तम् ॥** अजादीति पृथक् पदम्, विशेषणसमासो वा। **अश्वेन्द्ररथा इति ।** रथशब्दस्य पश्चात्समासे रथाश्वेन्द्रा इत्यपि भवति । **द्वन्द्वे घ्यन्तादजाद्यदन्तं विप्रतिषेधेनेति ।** 'द्वन्द्वे घि' इत्यस्यावकाशः—पटुगुप्तौ; 'अजाद्यदन्तम्' इत्यस्यावकाशः—उष्ट्रखरम्; इन्द्राग्नी इत्यत्रोभयप्राप्तौ परत्वाद् 'अजाद्यदन्तम्' इत्येतद्भवति विप्रतिषेधेनेति ॥ ३३ ॥

**अल्पाच्तरम् ॥** अत एव निपातनात्स्वार्थे तरप्, कुत्वाभावश्च । यदि तु प्रकर्षे तरप् 'धवखदिरपलाशाः' इत्यादौ बहुषु सन्निहितेषु द्विवचनोपपदत्वाभावादस्याप्रवृत्तावनियमः स्यात् । द्वयोरेव तु स्यात्—प्लक्षन्यग्रोधाविति । **शङ्खदुन्दुभिवीणा इति ।** तूर्याङ्गानामित्येकवद्भावो न भवति; तूर्यशिल्पोपजीविनामेव तत्र

### भावबोधिनी

'द्वन्द्वे' इसकी अनुवृत्ति होती है। द्वन्द्व समास में अजादि-अदन्त शब्द का पूर्व प्रयोग करना चाहिये। उदा०—उष्ट्रखरम् । [ऊँट और गधा ।] उष्ट्रशशकम् [ऊँट और खरगोश । यहाँ उष्ट्र अजादि-आदन्त होने से पहले प्रयुक्त होता है ।]

*बहुत शब्दों के होने पर कोई नियम नहीं है* अश्वरथेन्द्राः, इन्द्ररथाश्वाः । [यहाँ इन्द्र, अश्व और रथ का द्वन्द्व है । यहा कोई नियम नहीं है ।] *द्वन्द्व में घिसंज्ञक की अपेक्षा अजादि-अदन्त का विप्रतिषेधेन पूर्वनिपात होता है । *इन्द्राग्नी । इन्द्रवायू । [यहाँ इन्द्र शब्द अजादि और अदन्त होने के पहले प्रयुक्त होता है ।] [अदन्त में] तपरकरण का क्या प्रयोजन है ? अश्वावृषे, वृषाश्वे [अश्वा च वृषश्च । यहाँ अश्वा अजादि तो है परन्तु अदन्त=ह्रस्व अकारान्त नहीं है । अतः कोई नियम नहीं है ।]

**विमर्श**—यदि कहीं 'घिसंज्ञक का प्रयोग होने से 'द्वन्द्वे घि' (पा० सू० २।२।३२) की प्रवृत्ति सम्भव हो और अजाद्यन्त होने से 'अजाद्यन्तम्' (पा० सू० २।३।३३ की । इस स्थिति में 'अजाद्यन्तम्'—की ही प्रवृत्ति होती है । जैसे-इन्द्राग्नी । यहाँ 'अग्नि' घिसंज्ञक का पूर्वनिपात न होकर 'अजादि-अदन्त' इन्द्र का ही पूर्वनिपात होता है ॥ ३३ ॥

'द्वन्द्वे' इसकी अनुवृत्ति होती है । अल्प अचों वाला शब्द रूप द्वन्द्व समास में पहले प्रयुक्त करना चाहिये । उदा०—प्लक्षश्च न्यग्रोधश्च इस विग्रह में—प्लक्षन्यग्रोधौ । [पिलखन और बरगद] धवखदिरपलाशाः। बहुत से अल्प

***ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणां पूर्वनिपातो वक्तव्यः*** (म० भा० २.२.३४ वा० ३)। **हेमन्तशिशिरवसन्ताः। चित्रास्वाती। कृत्तिकारोहिण्यौ।**

**समानाक्षराणामिति किम्? ग्रीष्मवसन्तौ।**

*** लघ्वक्षरं पूर्वं निपततीति वक्तव्यम् *** (म० भा० २.२.३४ वा० ५)। **कुशकाशम्। शरशादम्।**

**न्यास:**

असमानाक्षराणामपि वर्णानामानुपूर्व्येण पूर्वनिपात इष्यत इति पृथग्वचनम्। आनुपूर्व्यंश्च वर्णानां जन्मकृतमिति लोकव्यवहारे प्रसिद्धम्। प्रसिद्धिश्च श्रुतिकृता। श्रुतौ हि पठ्यते—'मुखतो ब्राह्मणमसृजत्, बाहुभ्यां राजन्यम्,

**पदमञ्जरी**

ग्रहणात्। नियतद्रव्यविवक्षायां जातिपरत्वाभावात् 'जातिरप्राणिनाम्' इत्येतदपि न भवति। शङ्खवीणाभ्यां दुन्दुभेर्द्वन्द्वे दुन्दुभिशङ्खवीणा इत्यपि भवति। एवं मृदङ्गश्च शङ्खपणवौ च मृदङ्गशङ्खपणवाः, धनपतिश्च रामकेशवौ च प्रसादो धनपतिरामकेशवानामित्यादि भवति। तथा होता च पोता च नेष्टा चोद्गाता चेति बहूनां युगपद् द्वन्द्वे तृतीयस्योत्तरपदमनन्तरमिति तस्यैवानङ् भवति, नेतरयोः—होतृपोतृनेष्टोद्गातारः। द्वयोर्द्वयोर्द्वन्द्वे त्रयाणामप्यानङ् भवति—होतापोतानेष्टोद्गातार इति। एवमन्यत्रापि द्वन्द्वक्रियायामानुपूर्व्यविशेषाद्रूपविशेषो वेदितव्यः। पूर्वाभ्यामल्पाच्तरमित्येतत्पूर्वानुसारेण गम्यमानत्वाद् वृत्तौ न पठितम्। 'द्वन्द्वे घि' इत्यस्यावकाशः—पटुगुप्तौ, 'अल्पाच्तरम्' इत्यस्यावकाशः—प्लक्षन्यग्रोधौ; वागग्नी इत्यत्रोभयप्राप्तौ अल्पाच्तरमित्येतद्भवति। अजाद्यदन्तमित्यस्यावकाशः—उष्ट्रखरम्, अल्पाच्तरमित्यस्य स एव; वागिन्द्रावित्यत्रोभयप्राप्तौ 'अल्पाच्तरम्' इत्येतद्भवति।

**ऋतुनक्षत्राणामिति।** ऋतूनामानुपूर्व्यं प्रादुर्भावकृतम्, नक्षत्राणामुदयकृतम्। **मातापितराविति।** 'आचार्यः श्रेष्ठो गुरूणाम्, मातेत्येके' इति स्मृतिः। 'पितुर्दशगुणं माता गौरवेणातिरिच्यते' (मनु०) इति च।

**श्रद्धामेधे इति।** सत्यां श्रद्धायामर्थक्रियाकारिणो मेधेत्यभ्यर्हितत्वं श्रद्धायाः। **दीक्षातपसी इति।** दीक्षार्थं तप इत्यभ्यर्हितत्वं दीक्षायाः। लघ्वक्षरादपि तपसो विप्रतिषेधादभ्यर्हितमित्येतदेव भवति।

**समानाक्षराणामित्यत्र नास्तीति।** तेन ऋतुनक्षत्राणामित्यत्रैव वर्णग्रहणं न कृतमिति भावः। वर्णानामुत्पत्तिकृतमानुपूर्व्यं श्रूयत एव—'मुखतो ब्राह्मणमसृजद्बाहुभ्यां राजन्यमूरुभ्यां वैश्यं पद्भ्यां शूद्रम्' (ऋ० १०.९७) इति।

**भावबोधिनी**

अचों वालों में कोई नियम नहीं है—शङ्खदुन्दुभिवीणाः, वीणाशङ्खदुन्दुभयः [वीणा च शङ्खश्च, दुन्दुभिश्च—यह विग्रह है। इसमें कभी 'वीणा' का और कभी 'शङ्ख' का पूर्वनिपात होता है।]

* समान अक्षरों = अचों वाले ऋतुओं और नक्षत्रों में आनुपूर्व्य = प्रादुर्भाव के क्रम से पूर्वनिपात कहना चाहिये। * उदा०—हेमन्तशिशिरवसन्ताः, हेमन्तश्च, शिशिरश्च, वसन्तश्च—यह विग्रह है। सभी समान अच् वाले हैं। अतः उत्पत्ति के क्रम को मानकर पूर्वनिपात होता है]। चित्रास्वाती [चित्रा और स्वाति नक्षत्र हैं। चित्रा पहले होता है। अतः इसी का पूर्वनिपात किया जाता है]। कृत्तिकारोहिण्यौ [कृत्तिका च रोहिणी च। यहाँ कृत्तिका पहले होती है। अतः इसी का पूर्वनिपात होता है।]

समान अक्षर = अचों वाले के मध्य में—यह किस लिये है? ग्रीष्मवसन्तौ [यहाँ दो और तीन अक्षर हैं। अतः प्रादुर्भाव का क्रम न लेकर अल्प अच्वाला मानकर ग्रीष्म का पहले प्रयोग होता है।]

* लघु अक्षर वाले का पहले प्रयोग होता है, ऐसा कहना चाहिये * कुशकाशम् [कुश और काश = तृण विशेष] शरशादम् [बाण और शाद = घास]।

*** अभ्यर्हितं च पूर्वं निपततीति वक्तव्यम् * (वा० ४) । मातापितरौ । श्रद्धामेधे । दीक्षातपसी ।**

*** वर्णानामानुपूर्व्येण पूर्वनिपातः * (वा० ६) । ब्राह्मणक्षत्रियविट्शूद्राः । समानाक्षराणामित्यत्र नास्ति ।**

*** भ्रातुश्च ज्यायसः पूर्वनिपातो वक्तव्यः * (वा० ७) । युधिष्ठिरार्जुनौ ।**

*** संख्याया अल्पीयस्याः पूर्वनिपातो वक्तव्यः * (वा० ८) । द्वित्राः । त्रिचतुराः । नवतिशतम् ॥**

## ४५८. सप्तमीविशेषणे बहुव्रीहौ ॥ ३५ ॥ (८९८)

**सर्वोपसर्जनत्वाद्बहुव्रीहेरनियमे प्राप्ते नियमार्थं वचनम् । सप्तम्यन्तं विशेषणं च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम् । कण्ठेकालः । उरसिलोमा । विशेषणम्—चित्रगुः । शबलगुः ।**

### न्यासः

ऊरुभ्यां वैश्यम्, पद्भ्यां शूद्रम्' इति । **संख्याया अल्पीयस्याः** इति द्वन्द्वे चाद्वन्द्वे चेति वक्तव्यम् । **द्वित्राः, त्रिचतुरा** इति बहुव्रीहिः । **नवतिशतमिति** द्वन्द्वः ॥ ३४ ॥

**सप्तमीविशेषणे बहुव्रीहौ ॥ सर्वनामसंख्ययोरिति ।** यत्र गुणवचनेन सह समासः सोऽस्य विषयः । यत्र तु द्रव्यवाचिना तत्र सर्वनामसंख्यायोर्विशेषणत्वादेव पूर्वनिपातः सिद्धः ।

### पदमञ्जरी

**संख्याया अल्पीयस्या इति** । द्वन्द्वे चाद्वन्द्वे चेत्याहुः । **अल्पीयस** इति पाठे अल्पीयसोऽर्थस्य वाचिकाया इत्यर्थः । **नवतिशतमिति** । द्वन्द्वः, 'द्व्येकयोः' इति तु सौत्रो निर्देशः ॥ ३४ ॥

**सप्तमीविशेषणे बहुव्रीहौ ॥ कण्ठेकाल इति ।** यदा कण्ठे किञ्चिदस्तीति निर्ज्ञाते काल इति विशेषणं

### भावबोधिनी

* अभ्यर्हित = पूजनीय का पूर्वप्रयोग होता है, ऐसा कहना चाहिये ।* मातापितरौ । [माता च पिता च] श्रद्धामेधे [श्रद्धा च मेधा च ।] दीक्षातपसी [दीक्षा च तपः च] ।

* वर्णों का आनुपूर्व्येण = जन्मकृतश्रेष्ठत्वक्रम से पूर्वनिपात होता है—ऐसा कहना चाहिये ।* ब्राह्मण-क्षत्रियविट्शूद्राः [ब्राह्मणश्च, क्षत्रियश्च, विट् च शूद्रश्च यह विग्रह है । जन्मकृत श्रेष्ठता के आधार पर पूर्वनिपात होता है ।] यहाँ समान अक्षरों वाला नियम लागू नहीं हो सकता है । [अतः यह बनाया गया ।]

* बड़े भाई का पूर्वनिपात कहना चाहिये ।* युधिष्ठिरार्जुनौ [बड़ा भाई होने के कारण युधिष्ठिर का पूर्व-निपात होता है ।]

* सर्वत्र छोटी = कम संख्यावाची शब्द का पूर्वनिपात कहना चाहिये ।* द्वित्राः [द्वौ वा त्रयो वा । यहाँ बहुव्रीहि है ।] त्रिचतुराः [त्रयो वा चत्वारो वा । यहाँ भी बहुव्रीहि है । इन दोनों की व्युत्पत्ति के लिये 'संख्ययाऽ-व्यय०' (पा० सू० २।२।२५) की व्याख्या देखनी चाहिये ।] नवतिशतम् [नवतिश्च शतं च । यह द्वन्द्व है । [इस आधार पर 'द्व्येकयोर्द्विवचनैकवचने' (पा० सू० १।४।२२) यह कैसे होगा ? यह सौत्र प्रयोग है ।] ॥ ३४ ॥

बहुव्रीहि के सभी पद उपसर्जन होते हैं अतः अनियम प्राप्त रहते नियम करने के लिये यह सूत्र है । सप्तम्यन्त और विशेषणवाची शब्द बहुव्रीहि समास में पहले प्रयुक्त करना चाहिये । उदा०—[कण्ठे कालः यस्य सः इस विग्रह में] कण्ठेकालः [कण्ठ में है काल = मृत्यु जिसका, वह] उरसिलोमा [उरसि लोम यस्य सः । यहाँ भी सप्तम्यन्त का पूर्वनिपात होता है । 'अमूर्धमस्तकात् स्वाङ्गाद' (पा० सू० ६।३।१२) से सप्तमी का अलुक् होता है ।] विशेषण [के पूर्वप्रयोग का उदा०—] चित्रगुः [चित्राः गावः यस्य सः, यहाँ चित्रा विशेषणवाची है, गो विशेष्यवाची है । किन्तु दोनों उपसर्जन हैं । अतः विशेषणवाची का पूर्वनिपात होता है ।] शबलगुः [शबलाः गावः यस्य सः । चित्रवर्ण की गायें हैं जिसकी । यहाँ भी शबल विशेषण है । अतः इसी का पूर्व प्रयोग होता है ।]

*** सर्वनामसंख्ययोरुपसंख्यानम् *** (म० भा० २.२.३५ वा० १)। **सर्वश्वेतः । सर्वकृष्णः । द्विशुक्लः । द्विकृष्णः । अनयोरेव मिथः संप्रधारणायां परत्वात्संख्यायाः पूर्वनिपातः । द्व्यन्यः । त्र्यन्यः ।**

*** वा प्रियस्य पूर्वनिपातः *** वा० ३) । **गुडप्रियः । प्रियगुडः ।**

*** सप्तम्याः पूर्वनिपाते प्राप्ते गड्वादिभ्यः सप्तम्यन्तं परम् *** (वा० ४) । **गडुकण्ठः । गडुशिराः । कथं वहेगडुः ? प्राप्तस्य चाबाधा व्याख्येया ॥**

## ४५९. निष्ठा ॥ ३६ ॥ (८६६)

**निष्ठान्तं च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम् । कृतकटः । भिक्षितभिक्षिः । अवमुक्तोपानत्कः ।**

### न्यासः

**सप्तम्याः पूर्वनिपात इत्यादि ।** सप्तम्यन्तस्य पूर्वनिपाते प्राप्ते गड्वादिभ्यः परवचनं कर्त्तव्यमिति । सप्तम्यन्तं परमुच्यते = कथ्यते येन व्याख्यानेन तत् परवचनम् । तत्रेदं व्याख्यानम्—आहितादेराकृतिगणत्वाद् गडुकण्ठप्रभृतयस्तत्रैव द्रष्टव्याः, तेन गड्वादिभ्यः परं सप्तम्यन्तं भविष्यति । **कथं बहेगडुरिति ?** यदि गड्वादिभ्यः सप्तम्याः परवचनमिति भावः । **प्राप्तस्य च बाधा व्याख्येयेति ।** तत्रेदं व्याख्यानम्—'वाहिताग्न्यादिषु' इत्यतो वाग्रहणं क्रियते, सा च व्यवस्थितविभाषा विज्ञायते । तेन प्राप्तस्य परनिपातस्य बाधनं भविष्यति ॥ ३५ ॥

**निष्ठा ॥ ननु विशेषणमेवात्र निष्ठेति ।** कृतशब्दः क्रियाशब्दः । कटशब्दो द्रव्यवचनः । तत्र यथा

### पदमञ्जरी

प्रयुज्यते तदा सप्तमीग्रहणेन प्रयोजनम्, अन्यदा तु विशेषणत्वादेव सिद्धम् । **सम्प्रधारणायामिति ।** इदमस्तु इदमेवेति निरूपणा = सम्प्रधारणा । **परत्वादिति ।** शब्दपरविप्रतिषेधादित्यर्थः । एवमर्थमेव च 'संख्यासर्वनाम्नोः' इति नोक्तम् । **गड्वादिभ्य इति ।** गड्वादयः प्रयोगतो द्रष्टव्याः ॥ ३५ ॥

**निष्ठा ॥ अवमुक्तोपानत्क इति ।** उरःप्रभृतित्वात्कप् । **ननु चेत्यादि । यथा चित्रगुरिति । गुणद्रव्य-**

### भावबोधिनी

* सर्वनाम और संख्या के वाचक शब्दों का पूर्वप्रयोग कहना चाहिये ।* सर्वश्वेतः [सर्वः श्वेतः यस्य सः । सभी कुछ सफेद है जिसका, वह । यहाँ 'सर्व' का पूर्व प्रयोग होता है ।] सर्वकृष्णः [सर्वः कृष्णः यस्य सः । सभी है काला जिसका, वह । 'सर्व' शब्द सर्वनाम है । अतः पहले प्रयुक्त होता है ।] द्विशुक्लः [द्वौ शुक्लौ यस्य सः ।] द्विकृष्णः [द्वौ कृष्णौ यस्य सः । यहाँ द्वि शब्द संख्यावाची है । अतः इसका पूर्वनिपात होता है ।] इन सर्वनाम और संख्या के वाचक शब्दों का एक साथ प्रयोग होने के कारण संख्यावाचक का पूर्वनिपात होता है [अर्थात् वार्तिक में 'सर्वनाम' पहले है 'संख्या' बाद में है अतः संख्या वाचक ही बलवान् होने से पूर्व में प्रयुक्त होता है । उदा०—द्व्यन्यः [द्वौ अन्यौ यस्य सः । यहाँ 'द्वि' संख्यावाचक है । 'अन्य' सर्वनाम है । अतः संख्यावाची का पूर्वनिपात होता है । दो हैं अन्य जिसके वह] त्र्यन्यः—त्रयः अन्ये यस्य सः । यहाँ भी संख्यावाचक का पूर्वनिपात होता है ।]

* प्रिय शब्द का विकल्प से पूर्वनिपात होता है ।* उदा०—गुडप्रियः, प्रियगुडः [गुडः प्रियः यस्य सः । यहाँ कभी 'प्रिय' का और कभी 'गुड' का पूर्वनिपात होता है । जिसको गुड अच्छा लगता है ।]

* सप्तम्यन्त का पूर्वनिपात प्राप्त रहने पर 'गडु' आदि शब्दों के बाद सप्तम्यन्त का प्रयोग करना चाहिये ।* गडुकण्ठः [कण्ठे गडुः यस्य सः ।] गडुशिराः [शिरसि गडुः यस्य सः । दोनों में सप्तम्यन्त 'कण्ठे' और 'शिरसि' हैं । अतः इनका परनिपात होता है । गले या सिर पर जो मांस का गोला सा निकल आता है उसे 'गडु' कहते हैं ।] तो बहेगडुः [वहे = स्कन्धे गडुः यस्य सः—] यह प्रयोग कैसे होता है ? प्राप्त के बाध की व्याख्या करनी चाहिये । अर्थात् 'वा' का पूर्व अपकर्ष करके उसे व्यवस्थित-विभाषा मानकर कहीं-कहीं नहीं भी होता है] ॥ ३५ ॥

बहुव्रीहि समास में निष्ठा-प्रत्ययान्त का पूर्व में प्रयोग करना चाहिये । उदा०—कृतकटः । [कृतः कटः येन सः । कृतं कटे येन सः आदि विग्रह हैं ।] भिक्षितभिक्षिः [भिक्षिता भिक्षिः येन सः] अवमुक्तोपानत्कः [अवमुक्ता

**आहूतसुब्रह्मण्यः । ननु च विशेषणमेवात्र निष्ठा ? नैष नियमः, विशेषणविशेष्यभावस्य विवक्षानिबन्धनत्वात् । कटे कटेन कृतमिति वा विग्रहीतव्यम् ।**

*** निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम् *** (म० भा० २.२.३६ वा० १)। **शार्ङ्गजग्धी । पलाण्डुभक्षिती । मासजाता । संवत्सरजाता । सुखजाता । दुःखजाता । कथं कृतकटः, भुक्तौदनः ? प्राप्तस्य चाबाधा व्याख्येया ॥**

**न्यासः**

गुणो द्रव्यस्य विशेषणं तथा क्रियापि । तथा सति निष्ठान्तस्य विशेषणत्वात् पूर्वेणैव पूर्वनिपातः सिद्धः । कटे कृतमनेनेत्यादिना विग्रहभेदेन निष्ठाया विशेषणत्वाभावं दर्शयति । अत्र विग्रहे सप्तम्यन्तमेव विशेषणम्, निष्ठान्तं विशेष्यम्, सामानाधिकरण्ये हि क्रियागुणो विशेषणविशेष्यभावौ नियमेनानुभवतः, न हि वैयधिकरण्ये । तथा हि—पटस्य शुक्लः, काकस्य गतिरित्यत्र गुणादेर्विशेष्यत्वम्, व्यवच्छेद्यत्वात्; द्रव्यस्य तु विशेषणत्वम्, व्यवच्छेदकत्वात् । **निष्ठायाः पूर्वनिपाते इत्यादि ।** जात्यादिभ्यो निष्ठान्तं परमुच्यते, तेन तद्व्याख्यानं कर्त्तव्यम् । तत्रेदं व्याख्यानम्—सारङ्गजग्धी-मासजाता-सुखजातादयः शब्दा आहिताग्न्यादेराकृतिगणत्वात् तदन्तःपातिनः, तेन जातिकालसुखादिभ्यो निष्ठान्तं परं भवतीति । **सारङ्गजग्धीति ।** सारङ्गशब्दो जातिवचनः । ततः 'क्तादल्पाख्यायाम्' इत्यनुवर्त्तमाने 'अस्वाङ्गपूर्वपदाद्वा' इति ङीष् । **कथं कृतकट इति ।** कटशब्दस्य जातिवाचित्वादिति प्रश्नः । **प्राप्तस्य चाबाधा व्याख्येयेति ।** तेन कृतकट इत्यत्रापि भविष्यतीति भावः । सा पुनरप्राप्तस्य चाबाधा

**पदमञ्जरी**

शब्दयोरुपनिपाते गुणशब्दस्य विशेषणत्वम्, क्रियाद्रव्यशब्दयोरपि क्रियाया एव विशेषणत्वम् । ततश्च पूर्वेणैव सिद्धमिति भावः । **विवक्षानिबन्धनत्वादिति ।** यदा कृत किञ्चिदनेनेति निर्ज्ञाते कट इति प्रयुज्यते तदा कटो विशेषणमिति मन्यते । **कटे कटेन कृतमिति वा विग्रहीतव्यमिति ।** एवं विग्रहे कृतस्य विशेषणत्वशङ्कैव नास्तीति भावः । क्वचित्तु वाशब्दो न पठ्यते, तत्र विवक्षानिबन्धनत्वादित्युक्ते तामेव विवक्षां दर्शयतीति व्याख्येयम् ।

**जातिकालसुखादिभ्यः परवचनमिति ।** ज्ञापकात्सिद्धम्, 'जातिकालसुखादिभ्योऽनाच्छादनाद्' इत्याह, तज्ज्ञापयति 'जात्यादिभ्यः परा निष्ठा निपतति' (कात्या० वा० १४२२) इति । **शार्ङ्गजग्धीति ।** शार्ङ्ग

**भावबोधिनी**

उपानत् येन सः । छोड़ दिया है जूता को जिसने । यहाँ स्वार्थिक 'क' प्रत्यय होता है ।] आहूतसुब्रह्मण्यः [आहूतं सुब्रह्मण्यं येन सः] निष्ठाप्रत्ययान्त तो विशेषण ही होता है—[अतः पूर्व सूत्र से ही पूर्वनिपात सम्भव है] इस शंका समाधान यह है कि विशेषणविशेष्यभाव विवक्षामूलक होता है । यहाँ 'कटे कटेन वा कृतम्—यह विग्रह करना चाहिये । [यहाँ 'कृतम्' यह विशेषणवाची नहीं रहता है । अतः इसका पूर्वनिपात सम्भव नहीं है । यह सूत्र आवश्यक है ।]

* निष्ठा के पूर्वनिपात के प्रसङ्ग में जातिवाचक, कालवाचक और सुख आदि शब्दों के बाद निष्ठा-प्रत्ययान्त का प्रयोग होता है ।* शार्ङ्गजग्धी [शार्ङ्गं जग्धं यया सा । यहाँ निष्ठा-प्रत्ययान्त जग्ध का परनिपात होता है । शार्ङ्ग = मासजातः । विदग्ध मांस । न्यासकार ने 'सारङ्गजग्धी' यह लिखा है । परन्तु भाष्य में 'शार्ङ्गजग्धी' यही पाठ है । यह जातिवाची है] पलाण्डुभक्षिती [पलाण्डुः भक्षितो यया सा । यहाँ भी निष्ठान्त का पूर्वप्रयोग होता है । प्याज खाया है जिसने] मासजाता [मासः जातः यस्याः सा—विग्रह है । यहाँ कालवाचक से परे निष्ठा है] संवत्सरजाता [संवत्सरः जातः यस्याः सा ।] सुखजाता । [सुखं जातं यस्याः सा] दुःखजाता [दुःखं जातं यस्याः सा । इनमें निष्ठान्त का परप्रयोग किया जाता है ।] कृतकटः, भुक्तौदनः आदि प्रयोग कैसे होते हैं ? [यहाँ निष्ठान्त का परप्रयोग क्यों नहीं होता है ?] प्राप्त के बाध की व्याख्या करनी चाहिये [यहाँ भी 'वा' की अनुवृत्ति मानकर व्यवस्थित-विभाषा माननी चाहिए ।]

*** प्रहरणार्थेभ्यश्च परे निष्ठासप्तम्यौ भवत इति वक्तव्यम् *** (म० भा० २.२.३६ वा० ५)। **अस्युद्यतः। दण्डपाणिः। कथम् उद्यतगदः, उद्यतासिः ? प्राप्तस्य चाबाधा व्याख्येया ॥**

## ४६०. वाऽऽहिताग्न्यादिषु ॥ ३७ ॥ (९००)

**'निष्ठा' इति पूर्वनिपाते प्राप्ते विकल्प उच्यते। आहिताग्न्यादिषु निष्ठान्तं पूर्वं वा प्रयोज्यम्। अग्न्याहितः। आहिताग्निः। जातपुत्रः। पुत्रजातः। जातदन्तः। जातश्मश्रुः। तैलपीतः। घृतपीतः ऊढभार्यः। गतार्थः। आकृतिगणश्चायम्। तेन गडुकण्ठप्रभृतय इहैव द्रष्टव्याः ॥**

## ४६१. कडाराः कर्मधारये ॥ ३८ ॥

**गुणशब्दानां विशेषणत्वात् पूर्वनिपाते प्राप्ते विकल्प उच्यते। कडारादयः शब्दाः कर्मधारये समासे वा पूर्वं प्रयोक्तव्याः। कडारजैमिनिः। जैमिनिकडारः।**

**न्यासः**

पूर्ववदेव व्याख्येया। एवमुत्तरत्रापि व्याख्येया। **प्रहरणार्थेभ्य इत्यादि।** प्रहरणमर्थो येषां ते तथोक्ताः। तेभ्यः परे निष्ठासप्तम्यौ भवत इत्येतदथंरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—अस्युद्यतः, दण्डपाणिरित्येवमादीनां शब्दानामाहिताग्न्यादिषु पाठात् परे निष्ठासप्तम्यौ भवत इति। ३६ ॥

**वाऽऽहिताग्न्यादिषु** ॥ ३७ ॥

**कडाराः कर्मधारये** ॥ कडारादयो ये गुणशब्दास्तेषां विशेषणत्वं भवतीत्याह—**गुणशब्दानामित्यादि।** गतार्थम् ॥ ३८ ॥

**पदमञ्जरी**

जग्धमनयेति बहुव्रीहिः। 'क्तादल्पाख्यायाम्' 'अस्वाङ्गपूर्वपदाद्वा' इति ङीप्। अत्राहुः—निष्ठाशब्देन या विहिता निष्ठा तस्या ग्रहणम्। तेन सुस्थितम्, चारुहसितमित्यादौ 'नपुंसके भावे क्तः' इत्यस्य परनिपात इति ॥ ३६-३७ ॥

**भावबोधिनी**

* प्रहरण अर्थवाचक शब्दों से परे निष्ठा और सप्तम्यन्त शब्द होते हैं—ऐसा कहना चाहिये। * अस्युद्यतः [उद्यतः = कोपात् निष्क्रान्तः असिः यस्य सः यहाँ प्रहरणवाची 'असिं' से परे निष्ठान्त 'उद्यत' का प्रयोग किया जाता है।] दण्डपाणिः [दण्डः पाणौ यस्य सः। यहाँ सप्तम्यन्त पाणि का परप्रयोग होता है। सामान्य सूत्र से सप्तम्यन्त का पूर्वप्रयोग प्राप्त रहता है।] उद्यतगदः, उद्यतासिः [उद्यता गदा यस्य सः, उद्यतः असिः यस्य सः] ये प्रयोग कैसे होते हैं ? प्राप्त के बाध की व्याख्या करनी चाहिये। [यहाँ भी 'वा' का सम्बन्ध मानकर व्यवस्थित-विभाषा की कल्पना करनी चाहिये] ॥ ३६ ॥

'निष्ठा' इस पूर्व सूत्र से [निष्ठा-प्रत्ययान्त का] पूर्वनिपात प्राप्त रहते यह विकल्प कहा जा रहा है—आहिताग्नि आदि शब्दों में निष्ठा-प्रत्ययान्त का विकल्प से पहले प्रयोग करना चाहिये। उदा०—अग्न्याहितः आहिताग्निः [आहितः अग्निः येन सः। जिसने अग्नि का आधान कर लिया है। यहाँ निष्ठान्त के वैकल्पिक पूर्वप्रयोग के कारण दो रूप होते हैं] जातपुत्रः, पुत्रजातः [जातः पुत्रः यस्य सः। यहाँ भी निष्ठान्त 'जात' का पूर्वप्रयोग विकल्प से होता है।] जातदन्तः [दन्ताः जाताः यस्य सः] जातश्मश्रुः [जातः श्मश्रुः यस्य सः] तैलपीतः [तैलं पीतं येन सः] घृतपीतः [पीतं घृतं येन सः]। ऊढभार्यः [ऊढा भार्या येन सः]। गतार्थः [गतः अर्थः यस्य सः। इन सभी के दो दो रूप होते हैं।] यह आकृतिगण [माना गया] है। इसलिये [गडुकण्ठः आदि शब्दों को इसी गण में देखना चाहिये। [अर्थात् अपेक्षित शब्द का पूर्वनिपात करने के लिये शब्दों का पाठ इसी गण में करना चाहिये] ॥ ३७ ॥

गुणवाचक शब्द विशेषण होते हैं अतः पूर्वनिपात के प्राप्त रहते यह विकल्प कहा जा रहा है। कडार आदि शब्दों को कर्मधारय समास में विकल्प से पूर्व में प्रयुक्त करना चाहिये। उदा०—कडारजैमिनिः, जैमिनिकडारः।

कडार। गडुल। काण। खञ्ज। कुण्ठ। खञ्जर। खलति। गौर। वृद्ध। भिक्षुक। पिङ्गल। तनु। वटर। कर्मधारय इति किम्? कडारपुरुषो ग्रामः॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ
द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः॥

---

**न्यासः**

॥ इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां
द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः॥

---

**पदमञ्जरी**

कडाराः कर्मधारये॥ बहुवचननिर्देशादाद्यर्थोऽवगम्यत इत्याह—कडारादय इति॥ ३८॥

॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः॥

---

**भावबोधिनी**

[कडारश्चासौ जैमिनिः—यह विग्रह है। यहाँ 'विशेषणं विशेष्येण बहुलम्' (पा० सू० २।१।५७) से कर्मधारय समास होने पर विशेषण = कडार का पूर्वनिपात नित्य प्राप्त होता है। प्रस्तुत सूत्र विकल्प करता है। अतः दो रूप होते हैं। पीला जैमिनि—यह अर्थ है।

[इसमें यद्यपि 'आदि' शब्द का उल्लेख नहीं है तथापि 'कडाराः' इस बहुवचन के बल पर इसे भी गण माना गया है। इस गण में इन शब्दों का पाठ है—]

कडार [पीला]। गडुल [जिसके गले या सिर पर मांस का पिण्ड निकल आया है]। काण [काना]। खञ्ज [लंगड़ा] कुण्ठ [कुण्ठित]। खञ्जर। खलति [जिसके सिर पर बाल नहीं है, गंजा]। गौर [गोरा]। वृद्ध। भिक्षुक। पिङ्गल [पीला]। तनु [पतला]। वटर।

कर्मधारय में—इसका क्या फल है? कडारपुरुषः ग्रामः। [कडाराः पुरुषाः यस्मिन् ग्रामे सः। यहाँ बहुव्रीहि है। अतः विशेषण = कडार का ही पूर्वनिपात होता है।] ॥ ३८॥

॥ इस प्रकार जयादित्य द्वारा विरचित 'काशिका' वृत्ति में द्वितीय-अध्याय का द्वितीय-
पाद समाप्त हुआ॥

---

॥ इस प्रकार जयशङ्कर-लाल-त्रिपाठि-द्वारा विरचित 'भावबोधिनी' हिन्दी-व्याख्या में काशिकावृत्ति के
द्वितीय अध्याय का द्वितीय पाद समाप्त हुआ॥

---

## परिशिष्ट–१

# पाणिनीय सूत्र-प्रणयन-पद्धति

सूत्र उसे कहते हैं जो बहुत-सी बातों को थोड़े में ही संक्षिप्त रूप से कह दें। ये सूत्र छः प्रकार के हैं[1]—
१. अधिकारसूत्र, २. संज्ञासूत्र, ३. परिभाषासूत्र, ४. विधिसूत्र, ५. नियमसूत्र और ६. अतिदेशसूत्र।

### १. अधिकारसूत्र

अधिकार सूत्र उसे कहते हैं जिस सूत्र का अधिकार निश्चित अवधि तक के सूत्र तक हो जाय। अधिकार सूत्र अपने आगे आने वाले अष्टाध्यायी के सूत्रों से सम्बद्ध होता है। ये अधिकार सूत्र मुख्य रूप से कुछ इस प्रकार हैं—

| सूत्र | | | | |
|---|---|---|---|---|
| १. उपदेशेऽजनुनासिक इत् | १.३.२ | से | १.३.९ | तक |
| २. अनुदात्तङित् आत्मनेपदम् | १.३.१२ | से | १.३.७१ | तक |
| ३. शेषात् कर्तरि परस्मैपदम् | १.३.७८ | से | १.३.९३ | तक |
| ४. कारके | १.४.२३ | से | १.३.५५ | तक |
| ५. प्राग्रीश्वरान्निपाताः | १.४.५६ | से | १.३,९७ | तक |
| ६. कर्मप्रवचनीयाः | १.४.८३ | से | १.३.९८ | तक |
| ७. प्राक्कडारात् समासः | २.१.३ | से | २.२.३८ | तक |
| ८. अव्ययीभावः | २.१.५ | | | |
| ९. तत्पुरुषः | २.१.२२ | | | |
| १०. शेषो बहुव्रीहिः | २.२.२३ | | | |
| ११. आर्धधातुके | २.४.३५ | | | |
| १२. अनभिहिते | ३.३.१ | से | २.३.७३ | तक |
| १३, १४. प्रत्ययः, परश्च | ३.१.१,२ | से | ५.४.१६० | तक |
| १५. धातोः | ३.१.९१ | से | ३.४.१७१ | तक |
| १६. कृदतिङ् | ३.१.९३ | से | ३.४.१७१ | तक |
| १७. कृत्याः प्राङ् णमुल | ३.१.९५ | से | ३.१.१३२ | तक |
| १८. भूते | ३.२.८४ | से | ३.२.१२२ | तक |
| १९. भविष्यति गम्यादयः | ३.३.३ | से | ३.३.१७ | तक |
| २०. लस्य | ३.४.७७ | | | |
| २१. ङ्याप्प्रातिपदिकात् | ४.१.१ | से | ५.४.१६० | तक |
| २२. स्त्रियाम् | ४.१.३ | से | ४.१.८१ | तक |
| २३. अनुपसर्जनात् | ४.१.१४ | | | |
| २४. तद्धिताः | ४.१.७६ | से | ५.४.१६० | तक |
| २५. समर्थानां प्रथमाद् वा | ४.१.८२ | | | |
| २६. अङ्गस्य | ६.४.१ | से | ७.४.९७ | तक |
| २७. संहितायाम् | ६.१.७१ | से | ६.१.१५१ | तक |
| २८. अन्तः | ६.२.९२ | | | |
| २९. उत्तरपदादिः | ६.२.१११ | | | |
| ३०. अन्तः | ६.२.१४३ | | | |
| ३१. अलुगुत्तरपदे | ६.३.१ | | | |
| ३२. संहितायाम् | ६.३.११४ | | | |
| ३३. मपर्यन्तस्य | ७.२.९१ | | | |
| ३४. उत्तरपदस्य | ७.३.१० | | | |

१. संज्ञा च परिभाषा च विधिर्नियम एव च। अतिदेशोऽधिकारश्च षड्विधं सूत्रमुच्यते।

| | | | | |
|---|---|---|---|---|
| ३५. सर्वस्य द्वे | ८.१.१ | | | |
| ३६. अनुदात्तं सर्वमपादौ | ८.१.१८ | | | |
| ३७. पदस्य | ८.१.१६ | से | ८.३.५४ | तक |
| ३८. पदात् | ८.१.१७. | से | ८.१.६९ | तक |
| ३९. पूर्वत्रासिद्धम् | ८.२.१ | | | |
| ४०. वाक्यस्य टेः प्लुत उदात्तः | ८.२.८२ | | | |
| ४१. तयोर्य्वावचि संहितायाम् | ८.२.१०८ | से | ८.४.६७ | तक |

इस प्रकार जिस सूत्र का अधिकार चलेगा वह आगे के सूत्रों में अन्वित होता जायगा। जैसे 'वर्तमाने लट्' सूत्र ३.२.१२३ है। इसमें 'प्रत्ययः, परश्च' (३.१.१,२) और 'धातोः' (३.१.९१) तीनों का अधिकार है। अतः ये तीनों उस 'वर्तमाने लट्' में अनुस्यूत हो जायेंगे। तब पूर्ण वाक्य बनेगा—'धातोः वर्त्तमाने लट् प्रत्ययः परश्च', भवति क्रिया का अध्याहार करके अर्थ हुआ—'धातु से वर्त्तमान काल में लट् प्रत्यय होता है और वह परे अर्थात् बाद में होता है'।

**अधिकार और अनुवृत्ति में भेद** यह है कि अधिकार सूत्र **सम्पूर्ण** रूप से आगे के सूत्रों से जाकर सम्बद्ध हो जाता है। किन्तु जहाँ सूत्र के **एक या दो पदादि** आगे आने वाले सूत्रों में अन्वित होते हैं उसे 'अनुवृत्ति' कहते हैं। जैसे—'उपदेशेऽजनुनासिक इत्' १.३.२ सूत्र से दो पदों 'उपदेशे' और 'इत्' की अनुवृत्ति 'तस्य लोपः' १.३.९ सूत्र तक होती है।

## २. संज्ञासूत्र

पारिभाषिक अर्थ व्यक्त करने वाले सूत्र संज्ञा सूत्र हैं, जैसे—धातु, प्रातिपदिक, इत्, लोप, वृद्धि, गुण आदि। ये संज्ञाएँ प्रायः प्रथम अध्याय के प्रथम पाद में हैं।

## ३. परिभाषासूत्र

जिस सूत्र का सम्बन्ध सम्पूर्ण शास्त्र में आगे एवं पीछे सर्वत्र हो वह परिभाषा सूत्र होता है वस्तुतः वह अव्यवस्था में व्यवस्था करता है[1]। जैसे—'इको गुणवृद्धि' १.१.३। यहाँ पहले सूत्र से वृद्धि और गुण की अनुवृत्ति है। सूत्र का अर्थ हुआ कि गुण हो या वृद्धि हो ऐसा जहाँ कहीं कहा जाय वहाँ इक् के स्थान में ही गुण और वृद्धि हो। इसी प्रकार 'आद्यन्तौ टकितौ' (१.१.४५) 'मिदचोऽन्त्यात् परः' (१.१.४६), 'एच इग्घ्रस्वादेशे' (१.१.४७) 'षष्ठी स्थानेयोगा' (१.१.४८), 'स्थानेऽन्तरतमः' (१.१.४९) आदि परिभाषा सूत्र हैं।

## ४. विधिसूत्र

विधान करने वाले सूत्र विधि सूत्र कहलाते हैं। जैसे—वर्तमाने लट् (३.२.१२३)। यह सूत्र वर्तमान काल में लट् के प्रयोग का विधान करता है। इसमें सामान्यविधि और निषेधविधि दोनों माने जाते हैं। जैसे—'न विभक्तौ तुस्माः' (१.३.४) यह सूत्र इत् संज्ञा का निषेधक सूत्र है।

## ५. नियमसूत्र

पूर्ववर्त्ती सूत्र से कार्य की सिद्धि सम्भव रहते हुए जब दूसरा सूत्र उसी कार्य के लिए बनाया जाता है तब उसे 'नियमसूत्र' कहते हैं। जैसे—'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' के रहते हुए 'कृत्तद्धितसमासाश्च' यह सूत्र नियमार्थ है।

## ६. अतिदेशसूत्र

समानता का अधिकार प्राप्त कराने वाला सूत्र 'अतिदेश' सूत्र कहलाता है, जैसे 'स्थानिवदादेशोऽनल्विधौ' (१.१.५५)। 'आदेश स्थानी के समान हो जाता है'।

———

१. परिभाषेयं स्थानिनियमार्था। अनियमप्रसङ्गे नियमो विधीयते। इति काशिका (१.१.३)।

## परिशिष्ट–२

# संक्षिप्तीकरण की विधियाँ

पाणिनि ने व्याकरण के प्रत्येक नियम को सूत्र रूप में अति संक्षिप्त करके प्रस्तुत किया है। इन सभी नियमों को अति संक्षिप्त करने में पाणिनि को अनेक विधियों का आश्रय लेना पड़ा जिनका विस्तृत विवेचन इस प्रकार हैं—

### १. प्रत्याहार-विधि—

विशिष्ट अनुबन्ध के साथ विशिष्ट वर्णसमुदाय का ज्ञान जिससे होता है उसे 'प्रत्याहार' कहते हैं[1], जैसे—अण्, अच् आदि प्रत्याहारों का प्रयोजन है लाघव अर्थात् लघु रूप से व्याकरण शास्त्र की प्रवृत्ति करना है[2]। इन प्रत्याहारों के द्वारा ही 'इको यण् अचि' (पा० सू० ६.१.७७) आदि छोटे-छोटे सूत्र से कार्य होता है अन्यथा सभी वर्णों का उच्चारण करके स्थानी का ज्ञान और आदेशों का ज्ञान तथा परनिमित्तों का ज्ञान कराने में गौरव अपरिहार्य होता है।

प्रत्याहार १४ माहेश्वर सूत्रों से बनते हैं। ये चोदह सूत्र हैं—१. अइउण्, २. ऋलृक्, ३. एओङ्, ४. ऐऔच्, ५. हयवरट्, ६. लण्, ७. ञमङणनम्, ८. झभञ्, ९. घढधष्, १०. जबगडदश्, ११. खफछठथचटतव्, १२. कपय्, १३. शषसर्, १४. हल्।

इन चौदह सूत्रों में से किसी भी अक्षर से आरम्भ करके अन्तिम हल् वर्ण तक के बीच के सभी अक्षर तथा वह प्रथम अक्षर भी उस प्रत्याहार के अन्तर्गत आते हैं, जैसे—'अच्' प्रत्याहार के अन्तर्गत 'अ इ उ ण्' सूत्र के प्रथम अक्षर 'अ' से लेकर 'ऐ औच्' सूत्र के च् वर्ण तक के सभी अक्षर आ जायेंगे। इस प्रकार अन्य प्रत्याहार 'अक्' 'अण्' आदि भी बनेंगे। इन माहेश्वर के सूत्रों के आधार पर कुल इकतालिस प्रत्याहार बनते हैं, जिनका परिगणन एक श्लोक में इस प्रकार किया गया है—

**एकस्मान् ङञणवटा, द्वाभ्यां षः, त्रिभ्य एव कणमाः स्युः।**
**ज्ञेयौ चयौ चतुर्भ्यो, रः पञ्चभ्यः, शलौ षड्भ्यः[3]॥**

| | | | | | | |
|---|---|---|---|---|---|---|
| **एक**—एक वर्ण से परे ङ् ञ् ण् व् ट् ग्राह्य है— | १. एङ् | २. यञ् | ३. अण् | ४. छव | ५. अट् | =५ |
| **दो**—वर्णों से परे ष् लेना ग्राह्य है— | १. झष् | २. भष् | | | | =२ |
| **तीन**—तीन वर्णों से परे क् ण् म् ग्राह्य है— | १. अक् | २. इक् | ३. उक् | | | =३ |
| | १. अण् | २. इण् | ३. यण् | | | =३ |
| | १. अम् | २. यम् | ३. ङम् | | | =३ |
| **चार** –चार वर्णों से परे च् य ग्राह्य हैं— | १. अच् | २. इच् | ३. एच् | ४. ऐच् | | =४ |
| | १. यय् | २. मय् | ३. झय् | ४. खय् | | =४ |
| **पांच**—वर्णों से परे र् ग्राह्य हैं— | १. यर् | २. झर् | ३. खर् | ४. चर् | ५. शर् | =५ |
| **छः**—छः वर्णों से परे श्, ल् ग्राह्य हैं— | १. अश् | २. हश् | ३. वश् | ४. झश् | ५. जश् ६. बश् | =६ |
| | १. अल् | २. हल् | ३. वल् | ४. रल् | ५. झल् ६. शल् | =६ |
| | | | | | कुल योग | ४१ |

इनके अतिरिक्त सुप्, तिङ् आदि अन्य प्रत्याहार भी हैं।

---

१. प्रत्याहारः 'अ इ उ ण्' इत्येवमादिको विशिष्टानुपूर्वीको विशिष्टानुबन्धकश्चाक्षरसमाम्नायः, प्रत्याह्रियन्ते = संक्षिप्यन्ते वर्णा अस्मिन्निति—न्यास, का० प्र० भा० पृ० १४।

२. प्रत्याहारो लाघवेन शास्त्रप्रवृत्त्यर्थः—इति काशिका, प्र० भा० पृ० १४। म० भा० पस्पशा०।

३. काशिका, भाग १, पृ० ५१।

**२. अनुबन्ध संयोजन—**

इत्संज्ञायोग्य वर्णों की अनुबन्ध संज्ञा होती है। अष्टाध्यायी में विभिन्न वर्णों की इत्संज्ञा की गई है। जिनकी इत्संज्ञा होती हैं उनका यद्यपि लोप हो जाता किन्तु इनके कारण कभी गुण, कभी वृद्धि, कभी आगम और कभी आदेश हुआ करते हैं। इत्संज्ञा वाले वर्ण हैं—[१] उपदेश अवस्था में अनुनासिक अच् अर्थात् धातु, आगम, प्रत्यय और आदेश के मूल रूप में स्थित अनुनासिक (स्वर) की इत्संज्ञा होती हैं। (उपदेशेऽजनुनासिक इत् १.३.२)। [२] अन्तिम हल् वर्ण (हलन्त्यम् १.३.३)।[1] [३] धातु के आदि में ञि टु डु (आदिर्ञिटुडवः १.३.५)। [४] प्रत्यय के पूर्व आने वाले चवर्ग, टवर्ग और षकार (चुटू १.३.७, षः प्रत्ययस्य १.३.६)। [५] तद्धित प्रत्ययों को छोड़कर अन्य प्रत्ययों के आरम्भ में आने वाले ल् श् तथा कवर्ग की इत्संज्ञा होती हैं (लशक्वतद्धिते १.३.८)।

**३. अनुवृत्ति—**

पूर्व के सूत्रों के किसी अंश का उत्तरवर्ती सूत्रों में अनुवर्तन होना ही 'अनुवृत्ति' होती है। सूत्रों के विस्तार को संक्षित करने की दृष्टि से अनुवृत्ति का प्रयोग हुआ है। सम्पूर्ण अष्टाध्यायी में सभी सूत्र मिलकर एक महावाक्य हैं। वस्तुतः पूर्व सूत्र में पठित शब्द की आवश्यकतानुसार उत्तरवर्त्ती सूत्रों में अनुवृत्ति करके (उसका उस सूत्र के पदो के साथ अन्वय करके) सूत्र का अर्थ पूर्ण कर लिया जाता है। इससे लाभ यह है कि सभी उत्तरवर्ती सूत्रों में उसी पद को दुहराना नहीं पड़ा है। अष्टाध्यायी में प्रायः यह अनुवृत्ति निकटस्थ सूत्रों में ही है। किन्तु कभी-कभी मण्डूकप्लुत्या दूरवर्ती सूत्रों में भी अनुवृत्ति चली जाती है।

**४. गणपाठ—**

आचार्य पाणिनि को जहाँ ऐसे अनेक शब्दों का उल्लेख करने की आवश्यकता हुई, जिनमें केवल एक ही नियम प्रत्ययविधान आदि का कार्य करता हो, वहाँ आचार्य ने उन सभी शब्दों का उल्लेख न करके उन सभी का संयोजन एक 'गण' बनाकर कर दिया है। गण के आदि में आने वाले एक ही शब्द को लेकर सूत्र बना दिया है। इस गणपाठ को एक स्थान पर एकत्रित कर दिया है, जैसे—'गर्गादिभ्यो यञ्' आदि। इस सूत्र में मात्र 'गर्ग' शब्द का उल्लेख है किन्तु वह अपने गण के १०८ शब्दों का बोधक हैं। इसी प्रकार 'सर्वादीनि सर्वनामानि' सूत्र में मात्र 'सर्व' शब्द पठित है जबकि यह अपने गण के ३५ शब्दों का बोधक है।

**५. संज्ञाएँ और परिभाषाएँ—**

संक्षिप्तीकरण की प्रक्रिया में संज्ञाओं (नामकरण) और परिभाषाओं का महत्वपूर्ण योगदात है। ये संज्ञाएँ पाणिनि ने तो बनाई हैं ही, किन्तु कुछ संज्ञाएँ तो पाणिनि के पूर्व ही बन चुकी थी। इनमें से कुछ इस प्रकार हैं—

(i **गुण**—अ, ए और ओ की गुण संज्ञा होती है। (अदेङ्गुणः १.१.२)।

(ii) **वृद्धि**—आ, ऐ और औ की वृद्धि संज्ञा है। (वृद्धिरादैच् १.१.१)

(iii) **संयोग**—दो या दो से अधिक व्यञ्जनों के मेल की 'संयोग' संज्ञा है। (हलोऽनन्तराः संयोगः १.१.७)

(iv) **सम्प्रसारण**—य् व् र् ल् के स्थान पर आने वाले क्रमशः इ, उ, ऋ, लृ वर्णों की सम्प्रसारण संज्ञा है। (इग्यणः सम्प्रसारणम् १.१.४५)

(v) **लोप**—प्रत्यय आदि का अपने स्थान पर न रहना (अदर्शन) ही 'लोप' कहा गया है। (अदर्शनं लोपः १.१.६०)।

यह लोप ही स्थानभेद से लुक्, श्लु और लुप् भी कहा जाता है।

---

१. धातु-सूत्र-गणोणादि वाक्य-लिङ्गानुशासनम्।
आगम-प्रत्ययादेशा उपदेशाः प्रकीर्तिताः॥

(क) 'पद' संज्ञा—

सुप् या तिङ् प्रत्ययों से युक्त शब्द की 'पद' संज्ञा होती है, (सुप्तिङन्तं पदम् १.४.१४)। [प्रातिपदिक में लगने वाले सुप् और धातु में लगने वाले प्रत्ययों को 'तिङ्' कहते हैं।] इसके अतिरिक्त सर्वनामस्थान को छोड़कर 'सु' से लेकर 'कप्' तक के प्रत्ययों में अन्य प्रत्ययों के जुड़ने पर पूर्व शब्द की भी 'पद' संज्ञा होती है (स्वादिष्वसर्वनामस्थाने १.४.१७)।

(ख) 'भ' संज्ञा—

यकारादि और स्वरादि-प्रत्ययों के जुड़ने पर पूर्व शब्द की 'पद' संज्ञा न होकर 'भ' संज्ञा होती है। (यचि भम् १.४.१८)।

(ग) 'उपधा' संज्ञा—

अन्तिम वर्ण से ठीक पहले वाले वर्ण की उपधा संज्ञा होती है (अलोऽन्त्यात् पूर्व उपधा १.१.६५)

(घ) 'घु' संज्ञा—

दाप् और दैप् धातुओं को छोड़कर दा और धा स्वरूप वाली धातुओं की घु संज्ञा होती है (दाधा घ्वदाप् १.१.२०)

(ङ) 'घ' संज्ञा—

तरप् और तमप् प्रत्ययों की 'घ' संज्ञा होती है (तरप्तमपौ घः १.१.२३)।

(च) 'टि' संज्ञा—

किसी शब्द के अन्तिम स्वर और यदि उससे बाद में व्यञ्जन भी हो तो उस समुदाय की टि संज्ञा होती है (अचोऽन्त्यादि टि १.१.६४)।

(छ) 'सवर्ण' संज्ञा—

जिन वर्णों के तालु आदि उच्चारण स्थान तथा आभ्यन्तर प्रयत्न एक हों वे 'सवर्ण' कहे जाते हैं (तुल्यास्यप्रयत्नं सवर्णम् १.१.९)।

(ज) सत्संज्ञा—

शतृ और शानच् प्रत्ययों की सत् संज्ञा है (तौ सत् ३.२.१२७)।

## ६. प्रातिपदिक संज्ञा—

(i) धातु, प्रत्यय और प्रत्ययान्त के अतिरिक्त कोई भी अर्थवान् शब्द 'प्रातिपदिक' कहलाता है (अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १.२.४५)। (ii) इनके अतिरिक्त कृदन्त, तद्धितान्त तथा समासान्त पदों की भी 'प्रातिपदिक' संज्ञा कही गई है (कृत्तद्धितसमासाश्च १.२.४६)।

## ७. सर्वनामस्थान संज्ञा

पुल्लिङ्ग और स्त्रीलिङ्ग (नपुंसकभिन्न) प्रातिपदिक शब्दों के आगे आने वाले सुट् (सु, औ, जस् अम् औट्)—ये (विभक्ति) और 'शि' प्रत्यय 'सर्वनामस्थान' कहे जाते है। जैसे |चितवान् .धनानि (शि सर्वनामस्थानम्, सुडनपुंसकस्य १.१.४२, ४३)।

## ८. विभाषा

जहाँ पर विकल्प से कोई विधान होता है या नहीं होता है वहाँ 'विभाषा' होती है (न वेति विभाषा १.१.४४)।

## ९. निष्ठा

क्त और क्तवतु प्रत्ययों की निष्ठा संज्ञा होती है (क्तक्तवतू निष्ठा १.१.२६)।

**१०. संहिता**

वर्णों की अति समीपता की 'संहिता' संज्ञा होती है (परः सन्निकर्षः संहिता १.४.१०९)।

**११. प्रगृह्य**

ईकारान्त, ऊकारान्त, एकारान्त द्विवचन (सुबन्त या तिङन्त) पदों की 'प्रगृह्य' संज्ञा कही गई है (ईदूदेद् द्विवचनं प्रगृह्यम् १.१.११)। इसके अतिरिक्त और भी शब्दों की प्रगृह्य संज्ञा होती है।

**१२. सार्वधातुक एवं आर्धधातुक**

तिङ् तथा शित् (जिनमें श् की इत् संज्ञा हो जाती है) प्रत्ययों की 'सार्वधातुक' संज्ञा कही गयी है (तिङ् शित् सार्वधातुकम् ३.४.११३) इनके अतिरिक्त शेष प्रत्यय 'आर्धधातुक' कहे जाते हैं (आर्धधातुकं शेषः ३.४.११४)।

**१३. अपृक्त**

अकेला अल् (और कुछ न हो तो उस) प्रत्यय की 'अपृक्त' संज्ञा होती है जैसे वाच् स्; यहाँ स् की 'अपृक्त' संज्ञा होकर लोप हुआ है (अपृक्त एकाल् प्रत्ययः १.२.४१)।

**१४. उपसर्जन**

समास (विधायक सूत्रों) में प्रथमा विभक्ति में कहे हुए शब्द की 'उपसर्जन' संज्ञा होती है; जैसे—'षष्ठी' (२.२.८) सूत्र में 'षष्ठी' शब्द प्रथमान्त है। अतः देवस्य गृहं देवगृहम् में देवस्य की 'उपसर्जन' संज्ञा होती है (प्रथमानिर्दिष्टं समास उपसर्जनम् १.२.४३)।

**१५. धातु**

भू आदि शब्दों की क्रियावाची होने पर धातु संज्ञा होती है; जैसे—पठति में पठ् की 'धातु' संज्ञा है (भूवादयो धातवः १.३.१)।

**१६. वृद्ध**

जिनके अचों में आदि (पहला) अच् वृद्धि संज्ञा वाला (आ ऐ औ में से कोई) हो तो उस शब्द की 'वृद्ध' संज्ञा होती है। (वृद्धिर्यस्याचामादिस्तद् वृद्धम् १.१.७२) (४.२.११३ से) छ प्रत्यय होता है।

**१७. ह्रस्व-दीर्घ-प्लुत**

कुक्कुट की कु कू कू३ आवाज में क्रमशः उकार की ध्वनि उ ऊ ऊ३ का जो काल होता है उसी के बराबर काल वाले अच् की 'ह्रस्व' 'दीर्घ' 'प्लुत' संज्ञा होती है (ऊकालोऽज्झ्रस्वदीर्घप्लुतः १.२.२७)।

**१८. उदात्त-अनुदात्त-स्वरित**

(i) जो ऊँचे स्वर से बोला जाय वह 'उदात्त' होता है। (उच्चैरुदात्तः १.२.२९)। (ii) जो नीचे स्वर से बोला जाय उसे 'अनुदात्त' कहते हैं (नीचैरनुदात्तः १.२.३०)। (iii) जिसमें दोनों ही (उदात्त एवं अनुदात्त) मिले हों वह 'स्वरित' होता है (समाहारः स्वरितः १.२.३१)। यह स्थान को मान कर समझना चाहिए।

**१९. परिभाषा**

निर्णय करने वाले सूत्र परिभाषा के अन्तर्गत आते है जैसे चि + तृच् में गुण (७.३.८४) प्राप्त है। अब गुण अ ए ओ तीनों है। फिर कौन होगा? यहाँ परिभाषा सूत्र 'स्थानेऽन्तरतमः' १.१.४९ निर्णय देता है कि सदृशतम हो। अतः इ के स्थान में सदृशतम ए होकर चेतृ (=चेता) बन जाता है। इसी प्रकार स्तु से स्तोता होता है)।

## परिशिष्ट—३

# पारिभाषिक शब्द

नीचे उन प्रसिद्ध पारिभाषिक शब्दों का संग्रह है जिनको पाणिनि ने प्रयुक्त करते हुए भी परिभाषित नहीं किया है।

### १. प्रकृतिभाव

जहाँ वर्णों में प्राप्त कोई विकार नहीं होता है और वे अपनी पूर्व स्थिति में ही बने रहते हैं, वहाँ 'प्रकृति-भाव' कहा जाता है; जैसे—हरी एतौ। इस प्रकार यहाँ यण् सन्धि नहीं होती है।

### २. आगम

जहाँ पूर्वतः वर्तमान आगमी वर्ण तो बना ही रहता है और अन्य वर्ण का भी आगमन हो जाता है, वहाँ 'आगम' कहा जाता है। यह आगम मित्रवत् होता है। जैसे—सन् + अच्युतः, नुट् = न् आगम = सन्नच्युतः।

### ३. आदेश

जहाँ एक वर्ण के स्थान पर दूसरा वर्ण आकर पूर्व वर्ण का नाश कर देता है वहाँ 'आदेश' कहा जाता है। यह आदेश शत्रुवत् होता है जो पूर्व वर्ण को हटाकर स्वयं बैठ जाता है। जैसे—सुधी + उपास्यः—'ई' का यण् 'य्' करने पर सुध्य् उपास्यः।

### ४. एकादेश

जहाँ दो वर्ण मिलकर एक रूप हो जाते हैं; वहाँ 'एकादेश' होता है; जैसे—रमा + ईशः = रमेशः (यह गुण-वृद्धि आदि रूप एकादेश है।)

### ५. पूर्वरूप

जहाँ पूर्व एवं पर वर्ण के मिलने पर केवल पूर्व वर्ण का ही रूप रह जाता है और पर वर्ण नष्ट हो जाय तो वहाँ 'पूर्वरूप' कहा जाता है; जैसे—हरो + अयम् = हरोऽयम्।

### ६. पररूप

जहाँ पूर्व एव पर वर्णों के मिलने पर केवल पर वर्ण ही रह जाता है और पूर्व वर्ण नष्ट हो जाता है वहाँ 'पररूप' कहा जाता है; जैसे—प्र + एजते = प्रेजते।

### ७. योग विभाग

प्रक्रिया की अवस्था में सूत्र का विभाग कर लेना 'योगविभाग' कहलाता है। इस प्रकार एक ही सूत्र के दो विभाग कर लिए जाते हैं। एक भाग की प्रवृत्ति होती है और दूसरे भाग की प्रवृत्ति नहीं होती है। आगे अन्य लक्ष्यों में उसकी प्रवृत्ति होती है। लक्ष्यसिद्धि ही इसका मूल है। जैसे—'विभाषा गुणेऽस्त्रियाम्' में 'विभाषा' योगविभाग है।

———

